# बालकोपदेशः

ईश्वरः असृजत् त्वाम् तव भ्रातरम् भगिनीम्

पितरम् मातातरम् सुहृदम् तथा च तव बन्धुवर्गम् ।

ईश्वरः असृजद् आदित्यम् चन्द्रमसम् तारकाणि च ।

ईश्वरः असृजत् पशून् विहगान् च ।

ईश्वरः असृजत् पर्वतान् नदीः वृक्षान् च ।

ईश्वरः असृजत् सकलम् इदम् विश्वम् । १

सः तव हृदये निवसति ।

सः सर्वत्र अस्ति ।

सः सर्वव्यापकः अस्ति ।

सः सर्वज्ञः अस्ति ।

सः सर्वशक्तिमान् अस्ति ।

सः सर्वेषु दयालुः अस्ति ।

सः सर्वेषु स्नेहिलः अस्ति ।

सः सम्पूर्णः आनन्दमयः अस्ति ।

तव देहः तस्य चलन्मन्दिरम् अस्ति ।

(अतः) देहम् शुद्धम् सुदृढम् निरोगि च त्वम् रक्ष । २

ईश्वरो ह प्रेम ।

ईश्वरो हि सत्यम् ।

ईश्वरो वै शान्तिः ।

ईश्वरो ह आनन्दः ।

ईश्वरो वै प्रकाशः ।

ईश्वरो हि शक्तिः अस्ति ।

ईश्वरो ह ज्ञानम् ।

तम् वेद मुक्तः च भव । ३

प्रतिदिनम् सायम्प्रातः कीर्तनम् कुरु ।

प्रतिदिनम् प्रार्थनाम् कुरु ।

तस्मै पुष्पाणि निवेदय ।

तम् च नमस्कुरु ।

तस्मै मिष्टान्नम् निवेद्य एव भुङ्क्ष्व ।

तत्पुरतः दीपम् प्रज्वालय ।

तत्पुरतः कर्पूरम् प्रज्वालय ।

नीराजनम् कुरु ।

तस्मै मालार्पणम् विधेहि ।

प्रतिदिनम् तम् प्रार्थय ।

सः तुभ्यम् सर्वम् दास्यसि । ४

तस्य चित्रम् तव कक्षे स्थापय ।

तम् पूजय प्रतिदिनम् ।

स ते सर्वान् कामान् पूरयैत । ५

तस्य ईष्वरस्य प्रातःप्रार्थनाम् इमाम् कुरु प्रतिदिनम् :

जगदीश नमस्तुभ्यम् ।

त्वमेव मम सद्गुरुः । माता त्वम् मे सखा त्वम् मे ।

मार्गदेष्टा च त्वमेव मे ।

रक्ष माम् । तव अहम् अस्मि । सर्वम् त्वदीयम् ।

त्वदीयम् सङ्कल्पितमेव भविष्यति । ६

देवदेव नमस्तुभ्यम् देहि मे सुमतिम् वराम् ।

निर्मलम् कुरु माम् देहि प्रकाशम् शक्तिमेव च आरोग्यम्

दीर्घमायुष्यम् ब्रह्मचर्यम् च देहि मे । ७

विभो त्वम् दुर्गुणान् सर्वान् ममापनय सर्वथा ।

गुणान् धेहि देशभक्तिम् मातृभूमिम् भजै सदा । ८

शयनात् पूर्वम् निशासु ईश्वरस्य इमाम्

प्रार्थनाम् कुरु ।

मधुरेश्वर पापान् क्षमस्व दुष्कृतम् मे च ।

आभारितः अस्मि तव दानगणैः च सर्वैः ।

त्वम् वै दयालुः असि भूरिदयाम् करोषि ।

नित्यम् तव आस्मरणम् अस्तु मम अन्तरङ्गे ।

धर्मे रेतिम् सफ़लताम् च परीक्षणे मे

मेधाविनम्/मेधाविनीम् कुरु विभो भवते ।

नमस्ते ।

देहि स्मृतिम् दृढमतिम् प्रणयानि सर्वान् सेवै

मम त्वयि दृशिः सकलस्य भूयात् ।

ऋद्धिम् प्रदेहि मह्यम् पाहि माम् पितरम् जननीम् च

तातपितरम् पितामहीम् बन्धून् तथा च भगिनीम् ।

स्वस्ति प्रभो त्वम् असि कीर्तियशःप्रदाता । ९

वत्स गोविन्द कलहम् मा कुरु भ्रात्रा भगिन्या वर्गमित्रैः

वा । पित्रोः गुरोः च आज्ञाङ्कितः भव । मा कुरु

धूम्रपानम् । एतद् वै व्यसनम् । धूम्रपानकरणेन

त्वम् रोगग्रस्तः भविष्यसि ।

त्यज दुष्टसम्पर्कम् । १०

अश्लीलशब्दान् मा वद । मा कञ्चन अपशब्दान् ब्रूहि ।

सर्वेषु दयालुः भव । सर्वान् सेवस्व । सर्वेषु प्रीणय ।

गुरुजनान् आदर । मा किञ्चिदपि मुषाण । मा कञ्चिदपि

पीडय । विनम्रम् वद । मधुरम् वद । शालायाम्

समयपालकः भव । ११

दैनिक-स्वाध्यान्  सम्यक् पठ । वर्गेषु प्रथमः

भव । मा अतिक्रीडाम् भज । कीटान् मत्सरान् मा हिन्धि ।

समयम् व्यर्थम् मा गमय । १२

क्रीडापत्रैः मा क्रीड । क्रीडापत्रैः खेला त्वाम्

दुष्टम् बालम् करिष्यति । चलचित्रम् मा गच्छ ।

परन्तु प्रतिदिनम् देवालयम् गच्छ ईश्वरम् च भज ।

यदा त्वम् देवालयम् गच्छेः तदा पुष्पाणि कर्पूरम्

फलानि च उपहर । १३

मा कस्यापि द्वेषम् कुरु । सर्वेषु प्रीतिम् कुरु ।

अन्धजनाय वराटकम् देहि । पित्रोः वस्त्राणि क्षालय ।

पितृभ्याम् मा कदापि क्रुध्य । अन्येभ्यः अपि मा क्रुध्य ।

क्रोधः हि दुष्टः । क्रोधः तव स्वास्थ्यम् हरिष्यति ।

तव नाम च आविलम् करिष्यति । यदि क्रोधम् करिष्यसि

त्वम्  अकार्याणि करिष्यसि । १४

ईश्वरः तव विचारान् पश्यति । स्वविचारान् मा

अपह्नुहि । स्पष्टः भव । विचारेषु वचनेषु कर्मसु च

शुद्धः भव । १५

सूर्यदेवम् रविवासरे भज । पुनः पुनह् ब्रूहिः

ॐ मित्राय नमः । ॐ सूर्याय नमः । ॐ आदित्याय नमः ।

सूर्यदेवः तुभ्यम् स्वास्थ्यम् शक्तिम् दृष्टि-सामर्थ्यम्

च दास्यति । १६

सोमवासरे भगवन्तम् शिवम् भज । भौमवासरे

शुक्रवासरे च जगदम्बाम् भज । गुरुवासरे गुरुम् भज ।

शनिवासरे हनूमन्तम् भज । त्वम् बाहुल्यम् शान्तिम्

समृद्धिम् सफ़लताम् च अवाप्स्यसि । १७

प्रजापतिः ब्रह्मा अस्य जगतः उत्पादकः । तस्य विद्यादेवि सरस्वती शक्तिः पत्नी वा । भगवान् विष्णुः अस्य जगतः पालकः । तस्य शक्तिः पत्नी वा देवी लक्ष्मीः । सा समृद्धेः देवी । भगवान् शिवः अस्य जगतः संहारकः । तस्य शक्तिः पत्नी वा उमा पार्वती । तस्य ज्येष्ठः पुत्रः गणेशः । तस्य द्वितीयः पुत्रः सुब्रह्मण्यः । १८

भगवान् गणेशः सर्वान् विघ्नान् अपाकरोति । भग्वान् सुब्रह्मण्यः सर्वाः सफ़लताः सामर्थ्यम् च वितरति । श्रद्धया भक्त्या च तयोः पूजनम् विधेहि । त्वम् भक्तिम् भुक्तिम् मुक्तिम् च प्राप्स्यसि । १९

ईश्वरः त्वयि स्निह्यति । सः तुभ्यम् बहूनि शुभानि वस्तूनि ददाति । सः तुभ्यम् भोजनाय अन्नम् परिधानाय च वस्त्राणि यच्छति । सः तुभ्यम् श्रवणाय कर्णौ दर्शनाय नेत्रे घ्राणाय नासिकाम् स्वादनाय रसनाम् स्पर्शनाय कर्म करणाय च हस्तौ चलनाय च पादौ दत्तवान् । २०

त्वम् तम् ईश्वरम् शरीर-चक्षुर्भ्याम् दृष्टुम् न समर्थः किन्तु सः त्वाम् पश्यति । सः तव योगक्षेमम् वहति सः तत् तत् सर्वम् जानाति यत् यत् अपि त्वम् कर्म

करोषि । २१

तस्य नाम-गुण-कीर्तनम् कुरु । त्वाम् सर्वेभ्यः पापेभ्यः अवितुम् तम् प्रार्थयस्य । सः तुभ्यम् प्रसन्नः भविष्यति । सः ते अशिषः दास्यति । २२

भोः डेविड । गुलाब-पुष्पम् पश्य । अहो कीदृशम् सुन्दरम् । कीदृशी मनोहरा सुरभिः तस्मिन् । तुभ्यम् तत् रोचते । त्वम् तत् पुष्पम् चिनोषि जिघ्रसि च । कः वैज्ञानिकः गुलाबपुष्पम् उत्पादयितुम् समर्थः । त्वम् कर्गद-पुष्पम् उत्पादयितुम् सक्षमः किन्तु तत्र मधुरा सुरभिः न वर्तते । २३

गुलाबपुष्पम् नचिरात् म्लायति स्वकीयाम् सुन्दरताम् सुरभिम् च उज्झति । तत् तु नश्वरम् । तस्य सुन्दरता कतिचित् क्षण-स्थायिनी । कः सुन्दरम् पुष्पम् उत्पादयति । उत्पादकः ईश्वरः एव । सः एव सुन्दराणाम् सौन्दर्यम् । सः अविनाशि सौन्दर्यम् । तम् प्राप्नुहि । ततः त्वम् अपि शाश्वतम् सौन्दर्यम् अवाप्स्यसि । सौन्दर्यम् एव ईश्वरः । नित्य-अनित्ययोः विवेकम् नित्यम् भज । २४

एकः एव ईश्वरः । किन्तु तस्य नामानि अनन्तानि मूर्तयः च अनन्ताः । येन केन अपि नाम्ना तम् आकारय । यया कया अपि

मूर्त्या तम् पूजय या तुभ्यम् अतीव रोचते । त्वम् तम् अवश्यम् प्रक्ष्यसि । तस्य कृपाम् आशिषः च आसादयसि एव । २५

ब्रह्मा विष्णुः शिवः च हिन्दूनाम् एकेश्वरस्य त्रीणि स्वरूपाणि । अल्लः मोहमदीयानाम् ईश्वरः । यहूदीनाम् ईश्वरः येहोवा । ख्रिस्तीनाम् ईश्वरः स्वर्गस्थितः परमपिता । जरस्थोस्तीयानाम् अहुरमज़्दः ईश्वरः । २६

सर्वेषाम् धर्मसम्प्रदायानाम् ध्येयः ईश्वरः एव । प्रत्येकम् धर्मसम्प्रदायः ईश्वर-प्राप्तेः मार्गम् दिशति । ईश्वरः एव प्रत्येकम् धर्मसम्प्रदायस्य केन्द्र-विषयः । २७

तव ख्रिस्ति-मित्रैः मा युद्ध्यस्व । तव मोहमदीय-मित्रैः पारसिक-मित्रैः वा मा युद्ध्यस्व । तेषाम् धर्म-सम्प्रदायः अपि तान् ईश्वरम् प्रापयति यथा तव धर्म-सम्प्रदायः । तदेव गन्तव्यम् त्वम् तेषाम् केनचिद् एकेन पथा गच्छन् प्राप्नुयाः । सर्वे मार्गाः ईश्वरम् प्रति गच्छन्ति इति मनसि नितराम् कुरु । २८

शुधिः दानम् इन्द्रीय-संयमः तपः सत्यम् राग-द्वेश-राहित्यम् च तव सहाय्यम् करिष्यन्ति ईश्वर-प्राप्तिम् प्रति ॥ २९

